अकृतव्रणः-५ सोमदत्तिः-६। एत एव गोत्रनाम्नांक्रमेण १-आत्रेयः २-भारद्वाजः ३-वसिष्ठः ४-शांशपायनः ५-काश्यपः ६-सावर्णिः इत्याख्यायन्ते। त एते षडपि पुनस्तस्या लौमहर्षण्या मूलसंहिताया आदि संहितायाश्च बादरायण्या आधारेण स्वस्वेच्छाक्रमनिबद्धाः षट् संहिता रचयामासुः। तासु च जिज्ञासाख्यानसंवादप्रवृत्त्यनुरोधिप्रसङ्गसम्पतितसंक्षिप्तविस्तरानेक विभिन्नकथानकोपेतत्वाद्विभिन्नाकारास्वपि सर्गप्रतिसर्गादयः सामान्या धर्म्मा सर्वासु तदितरैस्तु तैस्तैर्विषयैः साधर्म्यं च वैधर्म्यं चान्यासामन्यासाम् तदित्थं साकल्येनाष्टौ संहिता जाताः इति केचित्। वायुपुराणविष्णुपुराणयोस्तु चतस्र एव संहिता उच्यन्ते १-लौमहर्षणिका २-काश्यपिका ३-सावर्णिका ४-शांशपायनिका चेति। एतत्संहिताचतुष्टयाधारेणैव ब्रह्मपुराणादीन्यऽष्टादशपुराणप्रकरणानि वेदव्यासकल्पितानीदानीं प्रसिद्धाष्टादशनिबन्धरूपैरुग्रश्रवः-प्रभृतिसूतसमुपबृंहितानि समपद्यन्त।

तथा च विष्णुपुराणम्—

---

५. अकृतव्रण और ६. सौमदत्ति। ये ही छः गोत्र के नाम से क्रमशः १. आत्रेय, २. भारद्वाज, ३. वसिष्ठ, ४. शांशपायन, ५. काश्यप और ६. सावर्णि कहे जाते हैं। (उन छः ने ही पुनः मूल संहिता लौमहर्षिणी और आदि संहिता बादरायणी के आधार से स्व स्व इच्छा के क्रम से निबद्ध छः संहिताओं की रचना की और उनमें जिज्ञासा और आख्यान रूप संवाद की प्रवृत्ति के अनुसार ही प्रसङ्गतः प्राप्त संक्षिप्त और विस्तृत अनेक विभिन्न कथानकों से युक्त होने के कारण विभिन्न आकार वाली होने पर भी सर्ग, प्रतिसर्ग आदि सामान्य धर्म सब में थे, उनसे इतर उन उन विषयों से साधर्म्य और अन्य में वैधर्म्य, इस प्रकार एक रूप तथा पृथक् स्वरूप वाली सम्पूर्ण रूप से आठ संहिताएँ हो गयी ऐसा कुछ लोग मानते हैं। वायुपुराण और विष्णुपुराण में चार ही संहिताएँ कहीं जाती हैं—१. लौमहर्षणिका, २. काश्यपिका, ३. सावर्णिका और ४. शांशपायनिका। इन चार संहिताओं के समूह के आधार से ही ब्रह्मपुराण आदि अष्टादश पुराण प्रकरण जो वेदव्यास द्वारा कल्पित तथा इस समय निबन्ध रूप से प्रसिद्ध हैं उग्रश्रवा आदि सूतों के द्वारा अठारह पुराण रूप में परिवर्धित हुए, जैसा कि विष्णु पुराण में कहा गया है—

## पराशर उवाच।

आख्यानैश्चाप्युपाख्यानैर्गाथाभिः कल्पशुद्धिभिः।
पुराणसंहितां चक्रे पुराणार्थविशारदः ।।१।। ३/६/१५

प्रख्यातो व्यासशिष्योऽभूत् सूतो वै रोमहर्षणः।
पुराणसंहितां तस्मै ददौ व्यासो महामुनिः ।।२।। ३/६/१६

—महामतिः मुद्रित वि.पु. पाठ

[१] सुमतिश्चा[२]ग्निवर्चाश्च [३] मित्रायुः [४] शांशपायनः।
अकृत[५]व्रण[६]सावर्णिः षट् शिष्यास्तस्य चाभवन् ।।३।। ३/६/१७

[५] काश्यपः संहिताकर्त्ता [६] सावर्णिः [४] शांशपायनः।
रोमहर्षणिका चान्या तिसृणां मूलसंहिता ।।४।। ३/६/१८

चतुष्टयेन भेदेन संहितानामिदं मुने।
आद्यं सर्व पुराणानां पुराणं ब्राह्ममुच्यते ।।५।। ३/६/१९

---

### पराशर बोले—

पुराणार्थ विशारद व्यास जी ने आख्यान, उपाख्यान गाथा और कल्पशुद्धि के सहित पुराण संहिता की रचना की।।१।।

रोमहर्षण सूत व्यास जी के प्रसिद्ध शिष्य थे। महामुनि व्यासजी ने उन्हें पुराणसंहिता का अध्ययन कराया।।२।।

उस सूतजी के सुमति, अग्निवर्चा, मित्रयु, शांशपायन, अकृतव्रण और सार्वणि— ये छः शिष्य थे।।३।।

काश्यपगोत्रीय अकृतव्रण, सार्वणि और शांशपायन—ये तीन संहिताकर्ता हैं। उन तीनों संहिताओं की आधार एक लोमहर्षण की संहिता है।।४।।

हे मुने! इन चार संहिताओं से मैंने विष्णुपुराण संहिता बनायी है। पुराणज्ञ कुल अठारह पुराण बतलाते हैं, उन सब में (आदिम) ब्रह्मपुराण है।।५।।

अष्टादश पुराणानि पुराणज्ञाः प्रचक्षते।
ब्राह्मं पाद्मं वैष्णवं च शैवं भागवतं तथा।।६।।

तथान्यन्नारदीयं च मार्कण्डेयं च सप्तमम्।
आग्नेयमष्टमं चैवद्भविष्यं नवमं स्मृतम्।।७।।

दशमं ब्रह्मवैवर्तं लैङ्गमेकादशं स्मृतम्।
वाराहं द्वादशं चैव स्कान्दं चात्र त्रयोदशम्।।८।।

चतुर्दशं वामनं च कौर्मं पञ्चदशं स्मृतम्।
मात्स्यं च गारुडं चैव ब्रह्माण्डं च ततः परम्।।९।।

सर्गश्च प्रतिसर्गश्च वंशो मन्वन्तराणि च।
सर्वेष्वेतेषु कथ्यन्ते वंशानुचरितं च यत्।।१०।।

यदेतत् तव मैत्रेय पुराणं कथ्यते मया।
एतद्वैष्णवसंज्ञं वै पाद्मस्य समनन्तरम्।।११।।

---

प्रथम पुराण ब्रह्म है, दूसरा पद्म, तीसरा वैष्णव, चौथा शैव, पांचवाँ भागवत, छठा नारदीय और सातवाँ मार्कण्डेय है।।६।।

इसी प्रकार आठवाँ आग्नेय, नवाँ भविष्यत्, दसवाँ ब्रह्मवैवर्त और ग्यारहवाँ पुराण लैङ्ग कहा जाता है।।७।।

तथा बारहवाँ वाराह, तेरहवाँ स्कन्द, चौदहवाँ वामन, पन्द्रहवाँ कौर्म तथा इसके पश्चात् १६ वाँ मात्स्य, १७ वाँ गारुड़ और १८ वाँ ब्रह्माण्ड पुराण है हे महामुने! ये ही अठारह महापुराण हैं।।८-९।।

इन सभी में सृष्टि, प्रलय, वंश, मन्वन्तर और भिन्न-भिन्न वंशों के अनुचरित्रों का वर्णन किया गया है।।१०।।

हे मैत्रेय! जिस पुराण को मैं तुम्हें सुना रहा हूँ वह पद्मपुराण के अनन्तर कहा हुआ वैष्णव नामक महापुराण है।।११।।

**सर्गे च प्रतिसर्गे च वंशमन्वन्तरादिषु।**
**कथ्यते भगवान् विष्णुरशेषेष्वेव सत्तम॥१२॥**

(विष्णु पुराण ३/६/१५-२७)

वायु पुराणेऽपि—

## लोमहर्षण उवाच।

**षट्शः कृत्वा मयाप्युक्तं पुराणमृषिसत्तमाः।**
**आत्रेयः सुमतिर्धीमान् काश्यपो ह्यकृतव्रणः॥१॥ ६१/५५**

**भारद्वाजोऽग्निवर्चाश्च वसिष्ठो मित्रयुश्चयः।**
**सावर्णिः सोमदत्तिस्तु सुशर्मा शांशपायनः॥२॥ ५६**

**एते शिष्या मम ब्रह्मन् पुराणेषु दृढव्रताः।**
**त्रिभिस्तत्र कृतास्तिस्रः संहिताः पुनरेव हि॥३॥ ५७**

---

हे साधु श्रेष्ठ! इसमें सर्ग, प्रतिसर्ग, वंश और मन्वन्तरादि में सर्वत्र केवल विष्णु भगवान् का ही वर्णन किया गया है॥१२॥

(श्री विष्णुपुराण—३/६/१५-२७)

**वायु पुराण में भी यही कहा गया है—**

## लोमहर्षण ने कहा—

हे ऋषिवर्य्यवृन्द! मैंने भी पुराण का छः प्रकार के विभागों में उपदेश किया है। अत्रि, गोत्रोत्पन्न बुद्धिमान् सुमति, काश्यपगोत्रीय अकृतव्रण॥१॥

अग्निवर्चा भारद्वाज, वशिष्ठ गोत्रोत्पन्न मित्रयु, सोमदत्तपुत्र सावर्णि और सुशर्मा शांशपायन॥२॥

हे विप्रवृन्द! ये हमारे पुराणों में शिष्य हैं, जो सब के सब दृढ़ व्रतधारी हैं। इनमें से तीन शिष्यों ने तीन संहिताओं का निर्माण किया॥३॥

**काश्यपः संहिताकर्त्ता सावर्णिः शांशपायनः।**
**मामिका च चतुर्थी स्यात् सा चैषा पूर्वसंहिता॥४॥** ५८

**सर्वास्ता हि चतुष्पादाः सर्वाश्चैकार्थवाचिकाः।**
**पाठान्तरे पृथग्भूता वेदशाखा यथा तथा॥५॥**

**चतुःसाहस्रिकाः सर्वाः शांशपायनिकामृते।** ५९
**लौमहर्षणिकामूलास्ततः काश्यपिकाः पराः॥६॥**

**सावर्णिका स्तृतीयास्ता यजुर्वाक्यार्थपण्डिताः।** ६०
**शांशपायनिकाश्चान्या नोदनार्थविभूषिताः॥७॥**

तदित्थं वेदव्यासकृतानां होत्रुद्गात्रध्वर्य्यथर्वणिकर्मानुरोधिनीनां चतसृणां याज्ञियकर्म-सहितानां पैलजैमिनिवैशम्पायनसुमन्त्वात्मक-शिष्य-प्रशिष्य-प्रणालीभेदेन यथा कालेकालेऽनेकाःशाखाः समभूवन् तथैव वेदव्यासकृतायाः स्त्रीशूद्रद्विजबन्ध्वादि सामान्यविधेया-

---

संहिता कर्ता ये काश्यप, सावर्णि और शांशपायन के नाम से प्रसिद्ध है। चौथी संहिता मेरी है जो यह पूर्व संहिता है॥४॥

ये सभी चारों संहिताएँ चार-चार पादों वाली एवं समान विषय की वाचिका है। वेद शाखाओं की भाँति केवल पाठान्तर में भिन्न-भिन्न है॥५॥

शांशपायन की संहिता को छोड़कर इन सबकी संख्या चार-चार सहस्र पद्यों की है। इन समस्त पुराण वेद संहिताओं का मूल लोमहर्षण की संहिता ही है, उसके बाद दूसरी संहिता काश्यप की है॥६॥

सावर्णिक संहिता का तृतीय स्थान है, जो यजुर्वेद की वाक्यावलि से मण्डित हैं इसके अतिरिक्त जो शांशपायन की संहिता है वह प्रेरणात्मक अर्थ से अर्थात् विधिवाक्यों से विभूषित है॥७॥　　　(वायुपुराण, अध्याय ६१/५५-६१)

इस प्रकार वेदव्यास द्वारा कृत होता, उद्गाता अध्वर्यु तथा अथर्वणिक कर्मो के अनुरोध वाली चारों यज्ञीय कर्म संहिता के पैल, जैमिनि, वैशम्पायन तथा सुमन्तु के शिष्यों-प्रशिष्यों की परम्परा के भेद से समय-समय पर अनेक शाखाएँ हुई। उसी प्रकार वेद व्यास के द्वारा कृत स्त्री, शूद्र, द्विज, बन्धु आदि सामान्य व्यक्तियों के अनुरोध वाली

नुरोधिन्या एकस्याः पुराणसंहिताया अपि लोमहर्षणात्मकशिष्यप्रशिष्य प्रणालीभेदेन संहिता-चतुष्टयीद्वारा क्रमशः इदानीं प्रसिद्धान्यष्टादशनिबन्धजातानि विभिन्नाकाराणि प्रासिद्ध्यन्त। तथा चोक्तं कौर्मेऽपि—

**पराशरसुतो व्यासः कृष्णद्वैपायनोऽभवत्।**
**स एव सर्ववेदानां पुराणानां प्रदर्शकः ॥१॥**

**अथ शिष्यान् स जग्राह चतुरो वेद पारगान्।**
**जैमिनिं च सुमन्तुं च वैशम्पायनमेव च ॥२॥**

**पैलं तेषां चतुर्थं च पञ्चमं मां महामुनिः।**
**ऋग्वेदपाठकं पैलं जग्राह स महामुनिः ॥३॥**

**यजुर्वेदप्रवक्तारं वैशम्पायनमेव च।**
**जैमिनिं सामवेदस्य पाठकं सोऽन्वपद्यत ॥४॥**

**तथैवाथर्ववेदस्य सुमन्तुमृषिसत्तमम्।**
**इतिहासपुराणानि प्रवक्तुं मामयोजयत् ॥५॥**

---

एक पुराण संहिता के भी लोमहर्षण आदि शिष्य-प्राशष्यों प्रणाली के भेद से चार संहिताओं के द्वारा ही इस समय प्रसिद्ध अठारह पुराण ग्रन्थ विभिन्न आकार-प्रकारों को लेकर प्रसिद्ध हुए। जैसा कि कूर्म पुराण में कहा गया है—

**सूत बोले—**

पराशर के पुत्र कृष्णद्वैपायन व्यास हुए। वही समस्त वेदों तथा पुराणों के प्रदर्शक हुए॥१॥

अनन्तर उन्होंने चार शिष्यों को वेद-पारंगत बनाने हेतु अपनाया, जो जैमिनि, सुमन्तु, वैशम्पायन और पैल हैं॥२॥

तथा महामुनि का पञ्चम शिष्य मैं हूँ। उन महामुनि ने पैल को ऋग्वेद का पाठक बनाया॥३॥

वैशम्पायन को यजुर्वेद का प्रवक्ता तथा जैमिनि को सामवेद का पाठक बनाया॥४॥

अथर्ववेद का पाठक ऋषि श्रेष्ठ सुमन्तु को बनाया और इतिहास पुराणों का प्रवचन करने के लिए मुझे नियुक्त किया॥५॥

एक आसीद् यजुर्वेदस्तं चतुर्द्धा व्यकल्पयत्।
चातुर्हौत्रमभूत्तस्मिंस्तेन यज्ञमथाकरोत्॥६॥

आध्वर्य्यवं यजुर्भिः स्यादृग्भिर्हौत्रं द्विजोत्तमाः।
औद्गात्रं सामभिश्चक्रे ब्रह्मत्वं चाप्यथर्वभिः॥७॥

ततः स ऋच उद्धृत्य ऋग्वेदं कृतवान् प्रभुः।
यजूँषि च यजुर्वेदं सामवेदं तु सामभिः॥८॥

एकविंशतिभेदेन ऋग्वेदं कृतवान् पुरा।
शाखानां तु शतेनैव यजुर्वेदमथाकरोत्॥९॥

सामवेदं सहस्रेण शाखानां प्रबिभेद सः।
अथर्वाणमथो वेदं बिभेद नवकेन तु॥१०॥

भेदरैष्टादशैर्व्यासः पुराणं कृतवान् प्रभुः।
सोऽयमेकश्चतुःपादो वेदः पूर्वं पुरातनात्॥११॥ इति।

---

यजुर्वेद एक था। उसे चार भागों में विभक्त किया। उसमें चातुर्हौत्र प्रतिष्ठित है, उससे (चातुर्हौत्र) यज्ञ किया॥६॥

हे द्विज श्रेष्ठो! यजुमन्त्रों से आध्वर्यव कर्म, साममन्त्रों से औद्गात्र कर्म, ऋचाओं से होता का कर्म तथा अथर्व मन्त्रों से ब्रह्मत्व का विधान निर्णीत किया।

तदनन्तर प्रभु ने ऋचाओं को उद्धृत कर ऋग्वेद का निर्माण किया। यजुमन्त्रों को उद्धृत करके यजुर्वेद और सामयोनि मन्त्रों द्वारा सामगान का प्रणयन किया॥८॥

प्रथम ऋग्वेद को इक्कीस भेद से। यजुर्वेद को सौ शाखाओं से सम्पन्न किया॥९॥

फिर व्यास ने सामवेद को एक हजार शाखाओं में विभक्त किया और अथर्ववेद को नौ शाखाओं में विभक्त किया॥१०॥

व्यास ने पुराण के अठारह भाग कल्पित किये। सो इस प्रकार पूर्वकाल में ब्रह्म से प्राप्त चतुष्पादात्मक (किन्तु पाद विभाग रहित) एक वेद को नाना शाखा विभाग में विभक्त किया॥११॥ (कूर्मपुराण, ५२ अध्याय/९-२१)

तेषु हि तत्संहिताचतुष्टयोपात्तानां कथानकानां पश्चादपि काले काले मुनिसमाजेषु तत्र-तत्र कथोपकथनादिना सात्त्विकराजसतामसोपासनाद्यनेकविभिन्नार्थप्राधान्यानुरोधेन च मुख्योद्देशभेदादितिहासप्रबन्धभेदः प्रावर्तत। अथायमितिहासविद्यावृत्तिकतया नियमितः सूतो लोमहर्षणः पश्चात्सम्भूतानामपि तत्तत्पुराणविद्यानुगतानां पुलस्त्यभीष्मादिपराशरमैत्रेयादि तत्तन्मुनिसंवादानां यथायथं विद्वान् पुराणप्रचारणाय कदाचिन्नैमिषारण्यं गत्वा तानि वेदव्यासेनैवादावष्टादशधापरिच्छिन्नानि संहिताष्टकमध्यात्कतिपयसंहितोल्लेखानुबन्धीनि तानि शौनकादिभ्यो जिज्ञासुभ्य आचचक्षे। तत्र यद्यपि तेषामष्टादशानां वेदव्यासव्यस्तानां पुराणानां पौर्वापर्य्यमन्यथा नियतमथापि जिज्ञासुजिज्ञासानुरोधिप्रवृत्तिकतया तत्क्रमानपेक्ष्येणैवायं लोमहर्षणस्तेभ्यो ब्राह्मं पाद्मं वैष्णवं कौर्मं मात्स्यं वामनं वाराहं ब्रह्मवैवर्तं नारदीयं भविष्य-मित्येतानि दश पूर्णानि श्रावयित्वा आग्नेयस्याप्यर्द्धं श्रावितवान्। अथ दैवान्नैमिषारण्यमागतो बलभद्रस्तत्रावशिष्टमाग्नेयं श्रावयन्तमेवैनं शूद्रत्वादुच्चासनायोग्यमप्युच्चासनासीनं दृष्ट्वा

---

उन चार संहिताओं में गृहीत कथानकों का बाद में भी समय-समय पर मुनि समाजों में वहाँ-वहाँ कथोपकथन आदि के द्वारा सात्त्विक राजस और तामस उपासना आदि अनेक विभिन्नार्थक विषयों की प्रधानता के अनुरोध से मुख्य उद्देश्य के भेद से इतिहास प्रबन्ध भेद प्रवृत्त हुआ। कालान्तर में इतिहास विद्या वृत्ति से नियमित सूत लोमहर्षण ने बाद में उत्पन्न हुए भी तत् तत् पुराण विद्याओं से अनुगत पुलस्त्य भीष्म आदि पराशर मैत्रेय आदि तत् तत् मुनि संवादों के यथार्थ रूप से ज्ञाता हो पुराणों के प्रचार के लिए कभी नैमिषारण्य जाकर वेद व्यास ने ही आदि में अठारह प्रकार से सीमित संहिताष्टकों के मध्य से कतिपय संहिताओं के उल्लेख से सम्बन्धित विषयों को शौनक आदि जिज्ञासुओं को बतलाया। वेद व्यास के द्वारा प्रसारित अठारह पुराणों का पौर्वापर्य्य यद्यपि अन्यथा नियत था तथापि जिज्ञासुओं की जिज्ञासा मानकर चलने की अनुरोध प्रवृत्ति से उनके क्रम की अपेक्षा किए बिना ही इस लोमहर्षण ने उनके लिए ब्राह्म पद्म वैष्णव कौर्म मत्स्य वामन वाराह ब्रह्मवैवर्त नारदीय भविष्य इन दस पूरे पुराणों को सुनाकर आधा आग्नेय पुराण भी सुनाना आरम्भ किया। इसी समय संयोग से नैमिषारण्य में आये हुए बलभद्र ने वहाँ शेष आग्नेय पुराण सुनाते हुए शूद्र होने के कारण उच्चासन के

क्रोधाकुलितो जघान। ततो लोमहर्षणे पञ्चत्वं गते व्यथितहृदयैस्तैः शौनकादिभिर्बलभद्र-परामर्शेन तत्पुत्रमुग्रश्रवसं नामसूतमाहूयाध्यासनं दत्वाऽवशिष्टं तत्सार्द्धं सप्तकं पुराणानामश्रूयत तदेतदुक्तम् पाद्मोत्तरखण्डे भागवतमाहात्म्ये।

## शिव उवाच।

**ब्राह्मं पाद्मं वैष्णवं च कौर्मं मात्स्यं च वामनम्।**
**वाराहं ब्रह्मवैवर्तं नारदीयं भविष्यकम्॥१॥**

**आग्नेयमर्द्धं वै सूताच्छुश्रुवुर्लोमहर्षणात्।**
**एतानि तु पुराणानि द्वापरान्ते श्रुतानि हि॥२॥**

**शौनकाद्यैर्मुनिवरैर्यज्ञारम्भात् पुरैव हि।**
**यदा तु तीर्थयात्रायां बलदेवः समागतः॥३॥**

---

अयोग्य भी लोमहर्षण को उच्चासीन देखकर क्रोध से भरकर उसको मार दिया। उसके पश्चात् लोमहर्षण के मरने पर दुःखित हृदय वाले उन शौनक आदि ने बलभद्र के परामर्श से उसके पुत्र उग्रश्रवा नामक सूत को बुलाकर वही उच्च आसन देकर शेष साढ़े सात पुराण सुने। यह बात पद्म पुराण के उत्तरखण्ड के भागवत माहात्म्य में कही गयी है (भगवती पार्वती को भगवान् शिव कथा कह रहे हैं)—

## शिव ने कहा—

१. ब्राह्म, २. पद्म, ३. वैष्णव, ४. कौर्म, ५. मात्स्य, ६. वामन, ७. वाराह, ८. ब्रह्मवैवर्त, ९. नारदीय, १०. भविष्य॥१॥

और आधे आग्नेयपुराण का सूत लोमहर्षण के मुख से श्रवण किया। इन पुराणों का द्वापर के अन्त में शौनक आदि श्रेष्ठ मुनियों ने यज्ञ आरम्भ से पहले ही श्रवण कर लिया था॥२-३॥

नैमिषं मिश्रकं नाम समाहूतो मुनीश्वरैः।
तत्र सूतं समासीनं दृष्ट्वा त्वध्यासनोपरि ॥४॥

चुक्षुभे भगवान् रामः पर्वणीव महोदधिः।
आषाढशुक्लद्वादश्यां पार्वणाहनि पार्वति ॥५॥

पूर्वार्द्धयामवेलायां भावित्वात् कृष्णमायया।
मुग्धो दर्भकरो रामः प्राहरल्लोमहर्षणम् ॥६॥

ततो मुनिगणाः सर्वे हाहाकारपरायणाः।
बभूवुर्नगजेऽत्यर्थं शोकदुःखाकुलान्तराः ॥७॥

ऊचुश्च रामं लोकेशं विनयेन क्षमापराः।
राम राम महाबाहो भवता लोककारिणा ॥८॥

अजानतेवाचरिता हिंसा ब्रह्मवधाधिका।
व्यासशिष्यो ह्ययं साक्षात्पुराणर्षिर्महातपाः ॥९॥

---

जब तीर्थ यात्रा में बलदेव नैमिषारण्य में श्रेष्ठ मुनियों के द्वारा बुलाये गये मिश्रक में आये तब उच्च आसन पर विराजमान सूत को देखकर पौर्णमसि पर्व में महासागर की तरह भगवान् बलराम क्षुब्ध हो गये ॥४॥

हे पार्वति! आषाढ़ शुक्ल द्वादशी में पूर्व अर्द्धयाम वेला में कृष्ण माया से (भवितव्यता से) मुग्ध हाथ में दर्भ लिए हुए बलराम ने लोमहर्षण पर प्रहार कर दिया ॥५-६॥

हे नगपुत्रि, तत्पश्चात् हा हा कार करते हुए सारे मुनिगण शोक और दुःख से आकुल अन्तःकरण वाले हो गये ॥७॥

उन्होंने विनय और क्षमाशीलता के साथ लोकेश बलराम को कहा ॥८॥

हे महाबाहु! राम! हे लोक कारक अर्थात् लोकनायक राम आपने न जानते हुए की भाँति ब्रह्महत्या से भी अधिक उग्र हिंसा कर दी है। यह साक्षात् व्यास शिष्य पुराण ऋषि तथा महातपस्वी थे ॥९॥

**अस्मै ह्यध्यासनं दत्तमस्माभिर्यज्ञकर्मणि।**
**अष्टादशपुराणानां वाचकाय कृतक्षणैः ॥१०॥**

**ततः प्रोवाच भगवान् रामः शत्रुनिषूदनः।**
**विप्राः शृणुत भद्रंवः कोपं त्यक्त्वा सुदूरतः ॥११॥**

**अस्य पुत्रो महाज्ञानी भविष्यति वरान्मम।**
**भवतामीप्सितं सर्व शास्त्रं वै कथयिष्यति॥१२॥**

**इति श्रुत्वा वचस्ते तु रामस्य सुमहात्मनः।**
**लौमहर्षणि माहूय सत्कृत्य नगनन्दिनि! ॥१३॥**

**तत्पदे स्थापयामासुः शेषसङ्कीर्त्तनाय वै।**
**आग्नेयोत्तरमाहात्म्यं श्रीमद्भागवतान्तकम्॥१४॥**

**पुराणसप्तकसार्द्धं शुश्रुवुर्हृष्टमानसाः ॥१५॥ इति।**

लोमहर्षणजीवद्दशायामपि नैकान्ततो लोहमर्षण एव प्रत्यहं श्रावयामास। किन्तु तत्रापि मध्ये मध्ये तत्पुत्रोऽयमुग्रश्रवा लोमहर्षणाज्ञया नैमिषारण्यं गत्वा यथायथमाचचक्षे एवेत्यस्मा-

---

अठारह पुराणों के वाचक इनको हमारे द्वारा इस यज्ञकर्म में समय निकाल कर कथा हेतु यह आसन दिया गया था॥१०॥

तब शत्रुओं का वध करने वाले भगवान् बलराम ने कहा—हे ब्राह्मणो! सुनो आप अपने क्रोध को पूरी तरह त्याग दीजिए। आपका कल्याण हो॥११॥

इस लोमहर्षण का पुत्र मेरे वरदान से महाज्ञानी होगा तथा आपके वाञ्छित सारे शास्त्रों का कथन करेगा॥१२॥

महात्मा बलराम के इस वचन को सुनकर हे पार्वति! उन्होंने लोमहर्षण के पुत्र को बुलाकर सत्कारपूर्वक शेष कथा कहने के लिए उस अध्यासन पर स्थापित किया॥१३-१४॥

तथा प्रसन्न हो आग्नेय के उत्तर भाग के माहात्म्य से लेकर श्रीमद्भागवत के अन्त तक साढ़े सात पुराणों का श्रवण किया॥१५॥

लोमहर्षण (की जीवित अवस्था ने अपने जीवनकाल) में एकमात्र स्वयं ही सदैव पुराणों का श्रवण नहीं कराया किन्तु उस समय भी बीच-बीच में उसके पुत्र इस उग्रश्रवा

देवपद्मपुराणाद् विज्ञायते। स्मर्य्यते हि तत्रोग्रश्रवःप्रोक्ते पाद्मे सृष्टिखण्डे पुराणोपक्रमप्रकरणे लोमहर्षणाज्ञया उग्रश्रवसः पाद्मपुराणकथनम् तथाहि—

**सूतमेकान्तमासीनं व्यासशिष्यो महामतिः।**
**लोमहर्षणनामा वा उग्रश्रवसमाह तत्॥१॥**

**ऋषीणामाश्रमाँस्तात गत्वा धर्मान् समासतः।**
**पृच्छतां विस्तराद् ब्रूहि यन्मत्तः श्रुतवानसि॥२॥**

**वेदव्यासान्मया पुत्र! पुराणान्यखिलानि च।**
**तवाख्यातानि प्राप्तानि मुनिभ्यो वद विस्तरात्॥३॥**

**ईजिरे दीर्घसत्रेण ऋषयो नैमिषे तदा।**
**तत्र गत्वा तु तान् ब्रूहि पृच्छतो धर्मसंशयान्॥४॥**

**उग्रश्रवास्ततो गत्वा ज्ञानविन्मुनिपुङ्गवान्।**
**अभिगम्योपसंगृह्य नमस्कृत्वा कृताञ्जलिः॥५॥**

---

ने लोमहर्षण की आज्ञा से नैमिषारण्य जाकर पिता की भाँति पुराणों का श्रवण करवाया था यह बात भी इसी पद्म पुराण से ही ज्ञात होती है। उग्रश्रवा के द्वारा कथित पद्म पुराण के सृष्टि खण्ड के 'पुराण उपक्रम प्रकरण' में इस विषय को कहा गया है कि लोमहर्षण की आज्ञा से उग्रश्रवा द्वारा पद्मपुराण का कथन किया गया—

एकान्त में बैठे हुए सूत उग्रश्रवा को महामति व्यास शिष्य लोमहर्षण ने कहा॥१॥

हे प्रिय पुत्र! ऋषियों के आश्रम में जाकर धर्मों के बारे में संक्षेप से पूछते हुए भी उनको विस्तार से वह सब कुछ सुनाओ जो तुमने मुझसे सुना है॥२॥

हे पुत्र! वेद व्यास से प्राप्त समस्त पुराणों को मैंने तुम्हें पढ़ाया है, विस्तार से उन्हें मुनियों को सुनाओ॥३॥

ऋषियों ने नैमिषारण्य में 'दीर्घ सत्र' यज्ञ किया। वहाँ जाकर धर्म के विषय में अपने संशय पूछते हुए उन मुनियों के संशय दूर करते हुए पुराण कथा कहो॥४॥

ज्ञानविद् और मेधावी उग्रश्रवा ने श्रेष्ठ मुनियों के पास जाकर पैर छूकर उनको करबद्ध नमस्कार प्रणति से प्रसन्न किया॥५॥

तोषयामास मेधावी प्रणिपातेन तानृषीन्।
चे चापि सत्रिणः प्रीताः ससदस्या महात्मने॥६॥

## ऋषय ऊचुः।

कुतस्त्वमागतः सूत! कस्माद्देशादिहागतः।
कारणं चागमे ब्रूहि वृन्दारकसमद्युते!॥७॥

## (उग्रश्रवाः) सूत उवाच।

पित्राहं तु समादिष्टो व्यासशिष्येण धीमता।
शुश्रूषस्व मुनीन् गत्वा यत्ते पृच्छन्ति तद्वद॥८॥
वदन्तु भगवन्तो मां कथयामि कथां तु याम्।
पुराणं चेतिहासं वा धर्मानथ पृथग्विधान्॥९॥

---

यज्ञ दीक्षित वे ऋषि भी यज्ञ सदस्यों के सहित उस महात्मा सूत पर प्रसन्न हो गए॥६॥

### ऋषियों ने कहा—

हे देवताओं के समान तेजस्वी सूत! आप कैसे (किस निमित्त से) और किस देश से यहाँ आये हैं? अपने आने का कारण बतलाइये॥७॥

### सूत ने कहा—

महर्षियों! मेरे बुद्धिमान् पिता व्यास शिष्य लोमहर्षण ने मुझे यह आज्ञा दी है कि 'तुम मुनियों के पास जाकर उनकी सेवा शुश्रूषा में रहो और वे जो कुछ पूछें, उन्हें बताओ॥८॥

पूजनीय ऋषियों मुझे बताइये, मैं कौन सी कथा कहूँ? पुराण कहूँ अथवा इतिहास अथवा भिन्न-भिन्न धर्म॥९॥

अथ तेषां पुराणस्य शुश्रूषा समपद्यत।
दृष्ट्वा तमतिविश्वस्तं विद्वांसं लौमहर्षणिम् ।।१०।।

तस्मिन् सत्रे कुलपतिः सर्वशास्त्रविशारदः।
शौनको नाम मेधावी विज्ञानारण्यके गुरुः ।।११।।

इत्थं तद्भावमालम्ब्य धर्माञ्छुश्रूषुराह तम्।
पित्रा सूत महाबुद्धे भगवान् ब्रह्मवित्तमः ।।१२।।

इतिहासपुराणार्थं व्यासः सम्यगुपासितः।
दुदोहिथ मतिं तस्य त्वं पुराणाश्रयां शुभाम् ।।१३।।

अमीषां विप्रमुख्यानां पुराणं प्रति संप्रति।
शुश्रूषास्ते महाबुद्धे तच्छ्रावयितुमर्हसि ।।१४।।

सर्वे हीमे महात्मानो नानागोत्राः समागताः।
स्वान् स्वानंशान् पुराणोक्ताच्छृण्वन्तु ब्रह्मवादिनः ।।१५।।

---

अब निःसन्दिग्ध ज्ञान वाले, आत्मविश्वासी, लोमहर्षण पुत्र विद्वान् उग्रश्रवा को देखकर उनके हृदय में पुराण सुनने की इच्छा जाग्रत् हुई। उस यज्ञ में यजमान थे कुलपति महर्षि शौनक, जो सम्पूर्ण शास्त्रों के विशेषज्ञ, मेधावी तथा (वेद के) विज्ञानमय आरण्यक भाग के आचार्य थे वे सब महर्षियों के साथ, सूत के पूर्ण आश्वस्त भाव का आश्रय लेकर धर्म सुनने की इच्छा से बोले।।१०-११।।

महाबुद्धिमान् सूत! आपेक पिता ने इतिहास और पुराणों का ज्ञान प्राप्त करने के लिए ब्रह्मज्ञानियों में श्रेष्ठ भगवान् व्यास की भलीभाँति आराधना की है और उनकी पुराण-विषयक श्रेष्ठ बुद्धि से आपने अच्छी तरह उनका लाभ उठाया है।।१२-१३।।

हे महामते! यहाँ जो श्रेष्ठ ब्राह्मण विराजमान हैं,ये इस समय पुराण सुनना चाहते हैं अतः आप इन्हें पुराण सुनाने की कृपा करें।।१४।।

ये सभी श्रोता, जो यहाँ एकत्रित हुए हैं, बहुत ही श्रेष्ठ हैं। भिन्न-भिन्न गोत्रों में इनका जन्म हुआ है। ये वेदवादी ब्राह्मण अपने-अपने वंश का पौराणिक वर्णन सुनें।।१५।।

संपूर्णे दीर्घसत्रेऽस्मिंस्तांस्त्वं श्रावय वै मुनीन्।
पाद्मं पुराणं सर्वेषां कथयस्व महामते ॥१६॥

कथं पद्मं समुद्भूतं ब्रह्मा तत्र कथंन्वभूत्।
प्रोद्भूतेन कथं सृष्टिः कृता, तां तु तथा वद ॥१७॥

एवं पृष्टस्ततस्ताँस्तु प्रत्युवाच शुभां गिरम्।
सूक्ष्मं च न्यायसंयुक्तं प्राब्रवीद्रौमहर्षणिः ॥१८॥

धर्म एष तु सूतस्य सद्भिर्दृष्टः सनातनः।
देवतानामृषीणां च राज्ञां चामिततेजसाम् ॥१९॥

वंशानां धारणं कार्य्यं स्तुतीनां च महात्मनाम्।
न हि वेदेष्वधीकारः कश्चित् सूतस्य दृश्यते ॥२०॥

येऽत्र क्षत्रात् समभवन् ब्राह्मण्याश्चैव योनितः।
पूर्वेणैव तु साधर्म्याद्वैधर्मास्ते प्रकीर्तिताः ॥२१॥

---

इस दीर्घकालीन यज्ञ के पूर्ण होने तक आप मुनियों को पुराण सुनाइये। महाप्राज्ञ! आप इन सब लोगों को पद्मपुराण की कथा कहिये ॥१६॥

पद्म की उत्पत्ति कैसे हुई उससे ब्रह्माजी का आविर्भाव किस प्रकार हुआ तथा कमल से प्रकट हुए ब्रह्मा ने किस तरह जगत् की सृष्टि की—ये सब बातें बताइये ॥१७॥

उनके इस प्रकार पूछने पर लोमहर्षण-कुमार सूत ने सुन्दर वाणी में सूक्ष्म अर्थ से भरा हुआ न्याययुक्त वचन कहा– ॥१८॥

(पुरातन) विद्वानों की दृष्टि में सूत का सनातन स्वधर्म यही है कि वह देवताओं, ऋषियों तथा अमित तेजस्वी राजाओं की पठित वंश परम्परा को धारण करे—उसे याद रखे, इतिहास और पुराणों में जिन ब्रह्मवादी महात्माओं का वर्णन किया गया है ॥१९॥

सूत का वेदों पर कार्य का कोई अधिकार नहीं है अर्थात् वेद पढ़कर उसका लोक में व्याख्या पूर्वक प्रचार-प्रसार का दायित्व सूत का नहीं है ॥२०॥

जो ब्राह्मणी योनि (ब्राह्मण वर्ण की माता) से क्षत्र (क्षत्रिय पिता) से उत्पन्न होते हैं, वे पूर्व अर्थात् क्षत्र के साधर्म्य के कारण एक नियतधर्म के अभाव वाले होते हैं अर्थात् विविध अनेक धर्माधिकार वाले कहे गये हैं ॥२१॥

**मध्यमो ह्येष सूतस्य धर्मः क्षत्रोपजीविनः।**
**पुराणेष्वधिकारो मे विहितो ब्राह्मणैरिह॥२२॥**

**दृष्ट्वा धर्ममहं पृष्टो भवद्भिर्ब्रह्मवादिभिः।**
**तस्मात् सम्यग् भुवि ब्रूयां पुराणमृषिपूजितम्॥२३॥**

**प्रवक्ष्यामि महापुण्यं पुराणं पद्मसंज्ञितम्।**
**सहस्रं पञ्चपञ्चाशत् पञ्चखण्डैः समन्वितम्॥२४॥**

**तत्रादौ सृष्टिखण्डं स्याद् भूमिखण्डं ततः परम्।**
**स्वर्गखण्डं ततः पश्चात् ततः पातालखण्डकम्॥२५॥**

**पञ्चमं च ततः ख्यातमुत्तरं खण्डमुत्तमम्।**
**एतदेव महापद्ममुद्भूतं यन्मयं जगत्॥२६॥**

**तद्वृत्तान्ताश्रयं यस्मात् पाद्ममित्युच्यते ततः।**
**एतत्पुराणममलं विष्णुमाहात्म्यनिर्म्मलम्॥२७॥**

---

क्षत्र धर्म की उपजीविका सूत का मध्यम धर्म रथ, हाथी तथा अश्वों का सञ्चालन है तथा चिकित्सा तृतीय धर्म है। हे ब्राह्मणों! आपने मुझे पुराणों में अधिकार दिया है, मेरा धर्म दृष्टि में रखकर आप जैसे ब्रह्मवादियों ने जो कुछ पूछा है–तदनुसार इसलिए पृथ्वी पर ऋषि पूजित पुराण अच्छी तरह से कह रहा हूँ॥२२-२३॥

पचपन हजार श्लोक वाला पाँच खण्डों में विभक्त महापुण्य यह पद्म नामक पुराण है॥२४॥

इसमें सबसे पहले सृष्टि खण्ड की कथा होगी, तत्पश्चात् भूमिखण्ड उसके बाद स्वर्गखण्ड, उसके बाद पातालखण्ड॥२५॥

अन्त में सबसे श्रेष्ठ पञ्चम खण्ड उत्तरखण्ड की कथा होगी। यह महा पद्म उत्पन्न हुआ है जिससे जगत् का निर्माण हुआ॥२६॥

उस पद्म तथा पद्ममय जगत् के वृत्तान्त से सम्बद्ध होने के कारण यह पुराण पाद्म कहा जाता है। विष्णु के निर्मल माहात्म्य से युक्त यह पुराण सर्वथा अमल (पूर्णतया दोषशून्य) है॥२७॥

इत्थमुपक्रम्य लोमहर्षणपुत्रोऽयमुग्रश्रवाः सूतः पञ्चभिः खण्डैः परिच्छिद्य सर्वं पाद्मं श्रावयामास। स चायमुग्रश्रवसः सर्वप्राथमिकपुराणकथनंप्रस्ताव इत्यप्येतल्लेखस्वारस्येनावगम्यते। किन्तु, अस्मिन्नेवोग्रश्रवसः पाद्मे उत्तरखण्डे पाद्मपुराणस्य लोमहर्षणश्रावितपुराण दशकान्तर्गतत्वं स्मर्य्यते तदेतदुभयवचनविरोधाल्लोमहर्षणप्रातिनिध्येनाप्युग्रश्रवसः पुराणवक्तृत्वं सिध्यतीति सुव्यक्तम्। तथा च विज्ञायते लोमहर्षणंस्तावत्तत्र गत्वा आदिखण्ड-भूमिखण्ड-ब्रह्मखण्ड-पातालखण्ड-क्रियाखण्डोत्तरखडात्मकैः षड्भिः खण्डैः परिच्छिद्य पाद्मं श्रावयितुं प्रवर्तमानोऽपि केनचित्कारणेन आदिखण्ड-ब्रह्मखण्ड-क्रियाखण्डान्येव श्रावयामास नतु सावशेषं श्रावयितुं लब्धावसरो बभूव। अतएवावशिष्टपूरणेन सावशेषं यथास्यात्तथा पाद्मं श्रोतुमीहमानैरपि तैः शौनकादिभिर्मुनिभिरस्य न वागतस्य सूतपुत्रस्योग्रश्रवसो विद्यापरीक्षणार्थमिवादितः पाद्मं श्रावयितु मिव प्रेर्य्यमाण उग्रश्रवा महोत्साहो भूमिखण्ड-पातालखण्डोत्तरखण्डमात्रकथनौचित्येऽपि जिज्ञासासामान्यात् सम्पूर्णमेव पाद्ममादितः सृष्टिखण्ड-भूमिखण्ड-स्वर्गखण्ड पातालखण्डोत्तरखण्डात्मकैः पञ्चभिःखण्डैः परिच्छिद्य

---

इस प्रकार प्रारम्भ कर लोमहर्षण के पुत्र उग्रश्रवा सूत ने पाँच खण्डों में सीमित कर समस्त पद्मपुराण सुनाया। उग्रश्रवा का यह सर्वप्रथम पुराण-कथन प्रस्ताव है जो इस लेख के स्वारस्य से ज्ञात होता है। परन्तु उग्रश्रवा के सुनाए इसी पद्म के उत्तरखण्ड में इसे अर्थात् पद्मपुराण को लोमहर्षण के द्वारा श्रावित दश पुराणों के अन्तर्गत भी बताया गया है। इस प्रकार इन दोनों वचनों में विरोध के कारण लोमंहर्षण के प्रतिनिधि के रूप में भी उग्रश्रवा का पुराणवक्तृत्व सिद्ध होता है यह सर्वथा स्पष्ट है। लोमहर्षण के वहाँ जाकर आदिखण्ड, भूमिखण्ड, ब्रह्मखण्ड, पातालखण्ड, क्रियाखण्ड और उत्तरखण्डात्मक छः खण्डों के द्वारा विभक्त कर पद्मपुराण को सुनाने के लिए प्रवृत्त होने पर भी किसी कारण से आदिखण्ड, ब्रह्मखण्ड और क्रियाखण्ड का ही श्रवण करवाया गया। शेष भाग सहित सम्पूर्ण पुराण को सुनाने के लिए उन्होंने अवसर प्राप्त नहीं किया। इसलिए अवशिष्ट के द्वारा पूर्ति से (शेष सम्पूर्ण) पद्मपुराण को जैसे-तैसे सुनने के इच्छुक भी उन शौनक आदि मुनियों के द्वारा नवागत सूत पुत्र उग्रश्रवा की विद्या के परीक्षण के लिए ही मानों आदि से पद्मपुराण सुनाने के लिए प्रेरित किये गये हुए की भाँति उग्रश्रवा ने अत्यधिक उत्साह से युक्त होकर भूमिखण्ड, पातालखण्ड और उत्तरखण्ड मात्र का कथन उचित होने पर भी जिज्ञासा-सामान्य के कारण सम्पूर्ण ही पद्म पुराण को आदि से सृष्टिखण्ड भूमिखण्ड, स्वर्गखण्ड, पातालखण्ड और उत्तरखण्डात्मक पाँच खण्डों के द्वारा विभाजित कर सुनाया। इस प्रकार

संश्रावयामास। तथा चेदं पाद्मं पुराणं द्विविधमभूत् लोमहर्षणप्रोक्तं षट्खण्डमेकम् (१) उग्रश्रवःप्रोक्तं पञ्चखण्डं द्वितीयम् (२) तत्र लौमहर्षणमसम्पूर्णं भूमिखण्ड-पातालखण्डोत्तर-खण्डानुपलब्धेः। औग्रश्रवसमपि स्वर्गखण्डविकलमेवास्माकमुपलब्धम्। न चौग्रश्रवसघटकानां भूमिखण्डपातालखण्डोत्तरखण्डानां लौमहर्षणघटकत्वमाक्षेप्तव्यम्, तेषामौग्रश्रवसत्वस्य तदक्षरस्वारस्येनैवावगमात्। तथाहि भूमिखण्डस्यान्ते—

**भूमिखण्डं नरः श्रुत्वा सर्वपापैः प्रमुच्यते।**
**मुच्यते सर्वदुःखेभ्यः सर्वरोगैः प्रमुच्यते॥१॥**

इति भूमिखण्डस्तुतिमुक्त्वा तत्प्रसङ्गेन सम्पूर्णस्य पाद्मस्य स्तुतिः पठ्यते—

**श्रोतव्यं हि प्रयत्नेन पद्माख्यं पापनाशनम्।**
**प्रथमं सृष्टिखण्डं तु द्वितीयं भूमिखण्डकम्॥१॥**
**तृतीयं स्वर्गखण्डं च पातालं तु चतुर्थकम्।**
**पञ्चमं चोत्तरंखण्डं सर्वपापप्रणाशनम्॥२॥**

---

यह पद्मपुराण दो प्रकार का हो गया। एक लोमहर्षण के द्वारा कहा गया छः खण्डों वाला तथा दूसरा उग्रश्रवा के द्वारा कहा गया पाँच खण्डों वाला। क्योंकि उसमें लोमहर्षण के द्वारा कहा गया पद्मपुराण अपूर्ण है इसमें भूमिखण्ड, पातालखण्ड, उत्तरखण्ड प्राप्त नहीं होने से। उग्रश्रवा द्वारा श्रावित भाग भी हमको स्वर्गखण्ड से रहित ही उपलब्ध हुआ है। ऐसा भी नहीं है कि उग्रश्रवा के (सुनाये गये) भूमिखण्ड, पातालखण्ड और उत्तरखण्डों को लोमहर्षण के घटक के रूप में मान ले, क्योंकि वे उग्रश्रवा के ही है ऐसा उसके वाक्य-विन्यास से भी ज्ञात होता है। जैसा कि भूमिखण्ड में कहा—

भूमिखण्ड को सुनकर मनुष्य सब पापों से मुक्त हो जाता है। सब दुःख रोगों से भी मुक्त होता है॥१॥

इस प्रकार भूमिखण्ड की फलस्तुति कहकर उसी प्रसङ्ग के माध्यम से सम्पूर्ण पद्मपुराण की भी फलस्तुति कर दी गयी है :—

पापों के नाशक पद्मपुराण का प्रयत्नपूर्वक श्रवण करना चाहिए। प्रथम सृष्टिखण्ड, द्वितीय भूमिखण्ड॥१॥

तृतीय स्वर्गखण्ड, चतुर्थ पातालखण्ड तथा पाँचवा सब पापों का नाश करने वाला उत्तरखण्ड है॥२॥

**यः शृणोति नरो भक्त्या पञ्चखण्डान्यनुक्रमात्।**
**गोप्रदानसहस्रस्य मानवो लभते फलम्॥३॥**

इत्येवं पञ्चखण्डोपादानस्य भूमिखण्डस्य पञ्चखण्डात्मकपद्मपुराणावयवत्वं बोध्यते। एवं पातालखण्डस्याप्युपक्रमे—

## ऋषय ऊचुः।

**श्रुतं सर्वं महाभाग! स्वर्गखण्डं मनोहरम्।**
**त्वत्तोऽधुना वदायुष्मञ् छ्रीरामचरितं हि नः॥१॥**

इत्येवं पूर्वापरसंगतिप्रतिबोधके वाक्येऽस्य पातालखण्डस्य स्वर्गखण्डोत्तरत्वप्रतिपादने-नौग्रश्रवसाङ्गत्वस्य स्पष्टं प्रतीयमानत्वात्। यद्यपि लौमहर्षणे ब्रह्मखण्डमपि स्वर्गोत्तरनाम्ना व्यपदिश्यते। अथापि स्वर्गखण्डपदस्य औग्रश्रवस स्वर्गखण्डात्मकविषयलाभे दूरोपस्थिता स्वर्गोत्तरखण्डपरता नावकल्पते इति बोध्यम्। एवमुत्तरखण्डेऽप्युपक्रमे—

---

जो मनुष्य भक्ति से पाँचों खण्डों का अनुक्रम से श्रवण करता है उस मानव को हजार गायों के दान का फल मिलता है॥३॥

इस प्रकार पाँच खण्डों का उपादान बताने वाला भूमिखण्ड, पाँच खण्डों वाले पद्मपुराण के अवयव के रूप में ज्ञात होता है। इसी प्रकार पातालखण्ड के आरम्भ में भी ऐसा कथन प्राप्त है :—

**ऋषियों ने कहा—**

हे महाभाग! मनोहर स्वर्गखण्ड आपसे सम्पूर्ण सुन लिया है आयुष्मन् सूत अब हमको श्रीराम का चरित बतलाये॥१॥

इस प्रकार पूर्वापर सङ्गति के प्रतिबोधक वाक्य में इस पातालखण्ड के स्वर्गखण्ड के पश्चात् प्रतिपादन से उग्रश्रवा के अङ्गत्व की स्पष्ट प्रतीति होती है यद्यपि लोमहर्षण ने ब्रह्मखण्ड को भी स्वर्गोत्तर नाम से कहा है तथापि स्वर्गखण्ड शब्द का उग्रश्रवा के स्वर्गखण्डात्मक पद की विषय प्राप्ति होने पर भी दूर उपस्थित स्वर्गोत्तर खण्डपरकता में समर्थ नहीं होती है यह भलीभाँति समझ लेना चाहिये। उत्तरखण्ड के प्रारम्भ में भी ऋषि बोले—

## ऋषय ऊचुः।

**श्रुतं पातालखण्डं च त्वयाख्यातं विदांवर।**
**नानाख्यानसमायुक्तं परमानन्ददायकम्॥१॥**
**अधुना श्रोतुमिच्छामो भगवद्भक्तिवर्द्धनम्।**
**पाद्मे यच्छेषमस्तीह तद्ब्रूहि कृपया गुरो॥२॥**

इत्येवं सङ्गतिबन्धात् पातालखण्डोत्तरत्त्वेनाभिमतस्यास्योत्तरखण्डस्य लौमहर्षणे क्रियाखण्डोत्तरस्थानोचितोत्तरखण्डात्मकत्वासम्भवात्। किञ्च एतस्मिन् पाद्मोतरखण्डे—

**कलौसहस्रमब्दानामधुना प्रगतं द्विज।**
**परीक्षितो जन्मकालात् समाप्तिं नीयतां मखः॥**

इत्युक्त्या एतदुत्तरखण्डान्वितपाद्मस्य शौनकयज्ञावसानकालिकत्वप्रतिपादनादस्य लौमहर्षणपाद्मस्य चाभावस्य स्पष्टं प्रतिबोधितत्वात् अत्रैव खण्डे-पाद्मं वैष्णवं चेत्याद्युपक्रम्य

---

### ऋषियों ने कहा—

हे विद्वत्वर्य तुम्हारे द्वारा कहा गया परम आनन्ददायक नाना आख्यानों से युक्त पातालखण्ड सुन लिया गया है॥१॥

अब पद्मपुराण में जो शेष भगवद्भक्ति वर्द्धक भाग है उसको हम सुनना चाहते हैं इसलिए हे गुरो! वह बतलाइये॥२॥

इस प्रकार सङ्गतिबद्धता के कारण उग्रश्रवा के पातालखण्ड के उत्तरवर्त्ती रूप में अभिमत उत्तरखण्ड का लोमहर्षण के क्रियाखण्ड के उत्तर स्थान के रूप में उचित होने से पुराण की उत्तरखण्डात्मकता सम्भव नहीं है। इस पद्मपुराण के उत्तरखण्ड में—

"हे द्विज! परीक्षित् के जन्म से कलियुग के एक हजार वर्ष अब बीत गये हैं। अतः यज्ञ को पूर्ण कीजिए"

इस उक्ति से उत्तरखण्ड से युक्त इस पद्मपुराण के शौनक यज्ञ के समाप्ति काल में कथा की निष्पत्ति के प्रतिपादन से इसका लोमहर्षण के पद्मपुराण के भाग का न होना स्पष्ट रूप से प्रपिादित हो रहा है। इसी खण्ड में पद्म और विष्णु इत्यादि का प्रारम्भ कर

**एतानि तु पुराणानि द्वापरान्ते श्रुतानि हि।**
**शौनकाद्यैर्मुनिवरैर्यज्ञारम्भात् पुरैव हि॥**

इत्युक्त्या लौमहर्षणपाद्मस्य यज्ञारम्भपूर्वकालिकत्वप्रतिपादनेनैतत्खण्डस्य तदङ्गत्वा-संभवात्। तस्मान्निःसन्दिग्धमेतानि औग्रश्रवसपाद्माङ्गानीति प्रतिपद्यते। अथैवमेव औग्रश्रवसे पाद्मे तृतीयं स्वर्गखण्डंनोपलभ्यते तत्रापि कैश्चिल्लौमहर्षणपाद्मस्यादिखण्डं सर्गखण्डाख्यया आदिसर्गखण्डाख्यया वा प्रसिद्धं प्रक्षिप्यस्थानपूर्तिं कुरुते, सर्गस्थाने च स्वर्गशब्दं प्रकल्प्य स्वर्गखण्डमादिस्वर्गखण्डमिति च व्यपदेष्टुं प्रसहते तदसत् तस्य लौमहर्षणप्रोक्तत्वात् पुराणो-पक्रमप्रकरणोपक्रान्तत्वाच्चौग्रश्रवसेषु पञ्चखण्डेषु तृतीयस्थान संपातानर्हत्वात्, तथाहि—

**एकदा मुनयः सर्वे ज्वलज्ज्वलनसंनिभाः।**
**नैमिषं समुपायाताः शौनकं द्रष्टुमुत्सुकाः॥१॥**
**कथान्तेषु ततस्तेषां मुनीनां भावितात्मनाम्।**
**आजगाम महातेजाः सूतस्तत्र महाद्युतिः॥२॥**

---

"ये पुराण द्वापर के अन्त में शौनक आदि मुनि वर्ग के द्वारा यज्ञ के आरम्भ होने के पहले ही सुने गये थे।"

इस उक्ति के कहने से लोमहर्षण का पद्मपुराण यज्ञारम्भ से पूर्व कालिकत्व प्रतिपादित होता है। इसलिए यह खण्ड उसका (लोमहर्षण वाला) अङ्ग नहीं हो सकता है अतः निःसन्दिग्ध रूप से यह उग्रश्रवा के पद्मपुराण के अङ्ग हैं ऐसा ज्ञात होता है। इसी प्रकार उग्रश्रवा के पद्मपुराण में तृतीय 'स्वर्गखण्ड' उपलब्ध नहीं होता है उसमें भी कुछ विद्वानों के द्वारा लोमहर्षण के पद्मपुराण के आदिखण्ड की स्वर्गखण्ड के नाम से अथवा आदि सर्गखण्ड नाम से प्रसिद्धि कर प्रक्षेप करके स्थान पूर्ति मान ली गयी है। सर्ग के स्थान पर स्वर्ग शब्द की परिकल्पना कर स्वर्गखण्ड आदि स्वर्गखण्ड कहने का साहस करते हैं वह ठीक नहीं है क्योंकि लोमहर्षण के द्वारा प्रोक्त होने के कारण पुराणों के उपक्रम प्रकरण में उपक्रान्त होने के कारण उग्रश्रवा के पाँच खण्डों में यह तृतीय स्थान कैसे ले सकता है। जैसा कि अधोदत्त श्लोक कुलकों से ज्ञात होता है—

एक बार जलती हुई अग्नि के समान तेजस्वी सब मुनि शौनक के दर्शन करने की उत्सुकता से नैमिषारण्य में आये॥१॥

उन विशुद्ध अन्तकरणों वाले मुनियों के वार्तालाप के अन्त में महातेजस्वी महाद्युति व्यास शिष्य लोमहर्षण नामक सूत वहाँ आ पहुँचे॥२॥

व्यासशिष्यः पुराणज्ञो लोमहर्षणसंज्ञकः।
तं पप्रच्छुर्महाभागाः शौनकाद्यास्तपोधनाः ॥३॥

पौराणिक महाबुद्धे रोमहर्षण सुव्रत।
त्वत्तः श्रुता महापुण्याःपुरा पौराणिकीः कथाः ॥४॥

सांप्रतं च प्रवृत्ताः स्म कथायां सक्षणा हरेः।
पुनः पुराणमाचक्ष्व हरिवार्त्तासमन्वितम् ॥५॥

## सूत उवाच।

साधु साधु महाभागाः साधु पृष्टं तपोधनाः।
तं प्रणम्य प्रवक्ष्यामि पुराणं पद्मसंज्ञकम् ॥६॥

सहस्रं पञ्चपञ्चाशत् षड्भिः खण्डैः समन्वितम्।
तत्रादावादिखण्डं स्याद् भूमिखण्डं ततः परम् ॥७॥

ब्रह्मखण्डं च तत्पश्चात् ततः पातालखण्डकम्।
क्रियाखण्डं ततः ख्यातमुत्तरं खण्डमुत्तमम् ॥८॥

---

शौनक आदि महाभाग तपस्वियों ने उसको पूछा—हे महाबुद्धे! सुव्रत! पौराणिक रोमहर्षण! पहले भी तुम से हमने महापुण्य युक्त पौराणिक कथाएँ सुनी हैं ॥३-४॥

इस समय हरि कथा सुनने को हमारा अतीव उत्सुक है इसलिए हरिवार्ता से सम्बन्धी पुराण कथा करो ॥५॥

## सूत ने कहा—

हे महाभाग तपस्वियो! आप धन्य हैं आपने बहुत अच्छा पूछा है मैं भगवान् हरि को प्रणाम कर पद्म पुराण की कथा कह रहा हूँ ॥६॥

जो कि पचपन हजार श्लोकों तथा छः खण्डों में है उसमें प्रारम्भ में आदिखण्ड, तत्पश्चात् भूमिखण्ड ॥७॥

तदनन्तर ब्रह्मखण्ड, उसके बाद पातालखण्ड, उसके बाद क्रियाखण्ड प्रसिद्ध है, तदनन्तर उत्तम उत्तरखण्ड है ॥८॥

**एतदेव महापद्ममद्भुतं यन्मयं जगत्।**
**तद्वृत्तान्ताश्रयं तस्मात्पाद्ममित्युच्यते बुधैः ॥९॥**
**तत्रादिखण्डं वक्ष्यामि पुण्यं पापविनाशनम्।**

इतीत्थं हि तस्योपक्रमः। तस्मान्नेदं लौमहर्षणं सर्गखण्डमौग्रश्रवसं स्वर्गखण्डं भवितुमर्हति। खण्डप्राथमिकत्वोचितमपि वा तृतीयस्थानासादनयोग्यतां धत्ते, तस्मादौग्रश्रवसं स्वर्गखण्डमतिरिक्तमेवास्तीत्यन्वेष्टव्यम्। अथैवं लौमहर्षणे पाद्मेऽप्यनुपलभ्यमानानां भूमिखण्डपातालखण्डोत्तरखण्डानां सत्ता संभाव्यते। प्रतिज्ञातखण्डक्रमानुसारेण प्रथम-तृतीय-पञ्चमखण्डोपलब्ध्या द्वितीय-चतुर्थ-षष्ठखण्डानामपि प्रतिपादनावश्यम्भावात् इत्याहुः। वयं तु ब्रूमः। अत्रैतेषूपलभ्यमानेषु लौमहर्षणपाद्मखण्डेषु सर्गखण्डाख्यमादिखण्डमेव लोमहर्षण-प्रोक्तं प्राचीनम्। आदिखण्डमुक्त्वा केनचित्कारणेन सम्पूर्णं वक्तुमलब्धावसरेणैव तेन सम्पूर्ण-पाद्मश्रावणाय उग्रश्रवःप्रेषणात् न तु मध्ये मध्ये एकैकं खण्डं त्यक्त्वा तदुत्तरखण्डकथनमवकल्पते।

---

यही अद्भुत महापद्म है जिससे जगत् उत्पन्न हुआ है। उस वृत्तान्त से सम्बन्धित होने के कारण विद्वानों के द्वारा यह पाद्म कहा जाता है। उस में पापों के विनाशक, पुण्य आदि खण्ड की कथा कहूँगा ॥९॥

इस प्रकार यह उसका उपक्रम है इस कारण से लोमहर्षण का सर्गखण्ड, उग्रश्रवा का स्वर्गखण्ड नहीं हो सकता। उचित खण्ड की प्राथमिकता उचित होने पर भी तृतीय स्थान की योग्यता धारण करता है इसलिए उग्रश्रवा का स्वर्गखण्ड अतिरिक्त ही है। इसका अन्वेषण करना चाहिए। इस प्रकार लोमहर्षण के पद्मपुराण में भी प्राप्त न होने वाले भूमिखण्ड, पातालखण्ड और उत्तरखण्ड की सता सम्भावित है। प्रतिज्ञात खण्ड के क्रम के अनुसार प्रथम, तृतीय, पञ्चम खण्ड की उपलब्धि से द्वितीय, चतुर्थ तथा छठा खण्डों का भी प्रतिपादन अवश्य हुआ होगा ऐसा कहते हैं। हम तो यह कहते हैं कि यहाँ इन उपलब्ध होने वाले लोमहर्षण के पद्मपुराण के खण्डों में सर्गखण्ड नाम का आदिखण्ड ही लोमहर्षण के द्वारा कथित प्राचीन है। आदिखण्ड को कहकर किसी कारण से सम्पूर्ण को कहने का अवसर प्राप्त न कर पाने से ही उसने सम्पूर्ण पद्मपुराण को सुनाने के लिए उग्रश्रवा को भेजा इससे स्पष्ट है कि बीच-बीच में एक-एक खण्ड को छोड़कर उसके उत्तरवर्ती खण्ड का कथन जचता नहीं है।

**एकदा मुनयः सर्वे सर्वलोकहितैषिणः।**
**सुरम्ये नैमिषारण्ये गोष्ठीं चक्रुर्मनोरमां॥**

इति पुराणोपक्रमाख्यप्रकरणोपक्रान्तस्य क्रियायोगसारस्य स्वतन्त्रप्रकरणग्रन्थत्वेसम्भ-वेऽपि लौमहर्षणपाद्मपुराणाङ्गत्वायुक्तत्वात् प्रथमेतरखण्डेषु पुराणोपक्रमाख्यप्रकरणोपक्रमस्य पुराणलेखपरिपाटीविरुद्धत्वात्। तस्मादादिसर्गखण्डमात्रं लोमहर्षणप्रोक्तं पद्मपुराणं भवति। अथ सृष्टिखण्डादिपञ्चखण्डोपेतमौग्रश्रवसं पद्मपुराणं विभिन्नं भवतीतीत्थं व्याख्यातं द्रष्टव्यम्।

न चेदं पद्मपुराणं द्विविधमिति श्रुत्वा आश्चर्य्यवदालोच्यम्, कर्तृभेदेन निबन्धस्याव श्यम्भावात्। सन्ति हि अनेकनिबन्धाः प्रत्येकपुराणस्य यथा। चतुःश्लोकीभागवतमन्यत् सप्तश्लोकी भागवतमन्यत् अष्टादशसहस्रश्लोकं वा लोमहर्षणप्रोक्तं भागवतमन्यन् अष्टादश-सहस्रश्लोकबद्धमौग्रश्रवसं च भागवतं नामान्यद् इतीत्थमनेकानि भागवतान्युपलभ्यन्ते एवमेवान्येषामप्यष्टादशशाखाबद्धानां पुराणानां प्रत्येकस्य तत्तत्संवादानुरोधिनो निबन्धाः

---

एक बार सब लोगों के हितैषी सभी मुनियों ने रमणीय नैमिषारण्य में मनोहर गोष्ठी का आयोजन किया।

इस प्रकार पुराण के उपक्रम नामक प्रकरण के रूप में प्रारब्ध क्रियायोगसार के स्वतन्त्र प्रकरण ग्रन्थ की संभावना होने पर भी लोमहर्षण के पद्मपुराण का अङ्ग नहीं है अनुचित होने के कारण, प्रथम से भिन्न खण्डों में पुराणोपक्रम नामक प्रकरण का आरम्भ पुराण लेखन की परिपाटी के विरुद्ध है। इस कारण से आदि सर्गखण्ड मात्र ही लोमहर्षण के द्वारा कहा गया है यही उसके पद्मपुराण का रूप है। सृष्टि खण्डादि पाँच खण्डों से युक्त उग्रश्रवा का पद्मपुराण विभिन्न है। इस प्रकार दो पद्मपुराण कहे गये हैं यह जानना चाहिए।

यह पद्मपुराण दो प्रकार का है यह सुनकर आश्चर्य नहीं करना चाहिए क्योंकि कर्ता के भेद से ग्रन्थ भेद अवश्यम्भावी है। प्रत्येक पुराण के अनेक ग्रन्थ है जैसे (१) चार श्लोक वाला भागवत अन्य है (२) सात श्लोक वाला भागवत अन्य है (३) अठारह हजार श्लोक वाला लोमहर्षण द्वारा कथित भागवत अन्य है। (४) अठारह हजार श्लोकों में निबद्ध ही उग्रश्रवा का भागवत अन्य है, इस प्रकार अनेक भागवत उपलब्ध होते हैं। इसी प्रकार इन अठारह शाखाओं वाले पुराणों में प्रत्येक के तत् तत् संवाद के अनुरोध वाले निबन्ध पृथक् रूप से ही हुए हैं ऐसा जाना जाता है। ब्राह्म पद्म आदि विशिष्ट नाम

पार्थक्येनैवाभूवन्निति विज्ञायते। संज्ञाविशेषास्तु ब्राह्मपाद्मादयः न विभिद्यन्ते तेष्वपि संवाद-विशेषविभिन्नेषु नानानिबन्धेषु प्रत्येकस्मिन् ग्रन्थकर्तृस्वारस्यानुरोधेन ग्रन्थसंख्याभेदः प्रकरण-विच्छेदविभेदश्च संसिद्धः यथैतस्मिन्नेव पाद्मेतावदालोक्यताम्। लोमहर्षणप्रोक्तं पाद्ममादितो-ऽन्यसंवादपरम्परासिद्धार्थनिबद्धम्। तदुक्तम् तत्रैव—

## लोमहर्षण उवाच।

**देवदेवो हरिर्यद्वै ब्रह्मणे प्रोक्तवान् पुरा।**
**ब्रह्मा तन्नारदायाह नारदोऽस्मद्गुरोः पुरः ॥१॥**
**व्यासः सर्वपुराणानि सेतिहासानि संहिताः।**
**अध्यापयामास मुहुर्मामतिप्रियमात्मनः ॥२॥**
**तत्तेऽहं संप्रवक्ष्यामि पुराणमतिदुर्लभम्। इति।**

अत्र विष्णुब्रह्मसंवादे शुद्धं पाद्मम् १। ततो ब्रह्मनारदसंवादे विष्णुब्रह्मसंवादोऽपि विषयीभवतीति विभिन्नो निबन्धः पाद्मस्य २। ततो नारदव्याससंवादे पूर्वसंवादौ विषयीभवत

---

तो भिन्न नहीं है उनमें भी संवाद विशेष के कारण विभिन्न नाना निबन्धों में प्रत्येक में ग्रन्थकर्ता के स्वारस्य के अनुरोध से ग्रन्थ संख्या का भेद और प्रकरण विच्छेद का भेद स्वभाव सिद्ध है जैसा कि पद्मपुराण में ही अवलोकन कीजिए। लोमहर्षण के द्वारा कथित पद्मपुराण आदि से ही संवादों की भिन्न-भिन्न परम्परा से ग्रथित है जैसा कि उसी में कहा है—

### लोमहर्षण ने कहा—

देवाधिदेव हरि ने सबसे पहले ब्रह्मा को कहा, ब्रह्मा ने नारद को कहा और नारद ने हमारे गुरु को कहा ॥१॥

व्यास ने अपने अतिप्रिय मुझे इतिहास सहित सारे पुराण और संहिताओं का बार-बार अध्यापन किया। उस अत्यन्त दुर्लभ पुराण का मैं तुम्हारे समक्ष प्रवचन करूँगा ॥२॥

यहाँ विष्णु ब्रह्मसंवाद में शुद्ध पद्मपुराण है (१) तत्पश्चात् ब्रह्म नारद संवाद में विष्णु और ब्रह्म का संवाद भी विषय बन जुड़ जाता है। इस प्रकार पद्मपुराण का निबन्धन (ग्रथन) कुछ भिन्न हो जाता है (२) तत्पश्चात् नारद और व्यास के संवाद में पूर्व के दो

इत्यन्यो निबन्धः पाद्मस्य ३। ततो व्याससूतसंवादे पूर्वे संवादास्त्रयोऽपि विषयीभवन्तीत्यपरो निबन्धः ४। अथेदानीं सूतशौनकसंवादे ते चत्वारोपि प्राक्तनाः संवादा विषयीभूता इति स विलक्षण एव निबन्धः पञ्चमो य इदानीमुपलभ्यते लौमहर्षणः पद्मपुराणाख्यः स चायमेव पञ्चमसंवादसिद्धः पाद्मनिबन्धः षट्खण्डः पञ्चपञ्चाशत् सहस्रश्लोकबद्धश्च न तु पूर्वेऽपीति सुव्यक्तम्। एषां पञ्चानामपि निबन्धानामाकारप्रकारभेदेऽपि मुख्योद्दिष्टविषयैक्यानुरोधेन पाद्म-संज्ञा न विरुध्यते। इत्थमन्यदुग्रश्रवःप्रोक्तं पाद्ममादितोऽन्यसंवादपरम्परासिद्धार्थनिबद्धम् तदुक्तं तत्रैव—

**देवदेवो हरिर्यद्वै ब्रह्मणे प्रोक्तवान् पुरा।**
**ब्रह्मणाभिहितं पूर्वं यावन्मात्रं मरीचये॥१॥**

**एतदेव च वै ब्रह्मा पाद्मं लोके जगाद वै।**
**सर्वभूताश्रयं तच्च पाद्ममित्युच्यते बुधैः॥२॥**

---

विषय भी गुँथ जाते हैं यह पद्म का अन्य निबन्ध हो जाता है (३) तत्पश्चात् व्यास सूत संवाद में पूर्ववर्ती तीनों ही संवाद विषय हो जाते हैं यह अन्य निबन्ध है। (४) अब सूत शौनक संवाद में चारों ही पूर्ववर्ती संवाद विषयभूत हैं इस प्रकार वह पाँचवा विलक्षण ही निबन्ध है। (५) लोमहर्षण के पद्मपुराण के रूप में इस समय यही उपलब्ध होता है। यही पञ्चम संवाद से सिद्ध (अन्तिम रूप प्राप्त) पद्मपुराण का निबन्ध (ग्रन्थ) छः खण्डों वाला पचपन हजार श्लोकों में निबद्ध है न कि पूर्ववर्ती ५५ हजार पद्यों के हैं यह सुव्यक्त है इन पाँचों ही ग्रन्थों का आकार प्रकार का भेद होने पर भी मुख्य उदिष्ट विषय की एकता के अनुरोध से पद्म संज्ञा विरुद्ध नहीं होती है। इस प्रकार उग्रश्रवा द्वारा कथित पद्म अन्य है जो कि आदि से ही अन्य संवाद की परम्परा से सिद्ध विषय वाला है जैसा कि वहीं कहा गया है—

देवों के देव हरि ने जिसे पहले ब्रह्मा को पढ़ाया और ब्रह्मा ने उसे मरीचि को कहा॥१॥

ज्यों कात्यों इसी को ब्रह्मा ने लोक में पद्म नाम से कहा (मरीचि के द्वारा यह परम्परा आगे नहीं चली अतः ब्रह्मा ने पुलस्त्य को यह पुराण दिया उनके माध्यम से यह लोक में प्रसिद्ध हुआ, इस भाव को यह पद्यार्थ बता रहा है)॥२॥

पाद्मं तत् पञ्चपञ्चाशत्सहस्राणीह पठ्यते।
पञ्चभिः पर्वभिः प्रोक्तं संक्षेपाद् व्यासकारितात् ।।३ ।।

(१) पौष्करं प्रथमं पर्व यत्रोत्पन्नः स्वयं विराट्।
(२) द्वितीयं तीर्थपर्वस्यात् सर्वग्रहगाश्रयम् ।।४ ।।
(३) तृतीयपर्वग्रहणा राजानो भूरिदक्षिणाः।
(४) वंशानुचरितं चैव चतुर्थे परिकीर्तितम् ।।५ ।।
(५) पञ्चमे मोक्षतत्त्वं च सर्वतत्त्वं निगद्यते।
(१) पौष्करे नवधासृष्टिः सर्वेषां ब्रह्मकारिता ।।६ ।।
देवतानां मुनीनां च पितृसर्गस्तथा परः।
(२) द्वितीये पर्वताश्चैव द्वीपाः सप्त ससागराः ।।७ ।।
(३) तृतीये रुद्रसर्गस्तु दक्षशापस्तथैव च।
(४) चतुर्थे संभवो राज्ञां सर्ववंशानुकीर्तनम् ।।८ ।।

---

सब प्राणियों का आश्रय वह पद्म ऐसा कहा जाता है। पद्म में पचपन हजार श्लोक हैं जो व्यास अर्थात् विस्तार युक्त कथन के संक्षिप्त रूप हैं। पाँच पर्वों में कहा गया है ।।३ ।।

(१) पौष्कर प्रथम पर्व है यहाँ स्वयं विराट उत्पन्न हुआ।
(२) द्वितीय तीर्थ पर्व है सब ग्रह समूहों का आश्रय है ।।४ ।।
(३) तृतीय पर्व में जिनका ग्रहण है वे प्रचुर दक्षिणा वाले राजा हैं।
(४) चतुर्थ पर्व में वंशानुचरित कहा गया है ।।५ ।।
(५) पञ्चम पर्व में मोक्षतत्त्व कहा गया है जो सभी तत्त्वों में महान् है।

(१) पौष्कर में नव प्रकार की ब्रह्म द्वारा की गयी तथा करायी गयी सृष्टि बतलायी गयी है ।।६ ।। देवताओं, मुनियों तथा पितृ-सर्ग का भी वर्णन है।

(२) द्वितीय में पर्वत, सागर सहित सात द्वीप वर्णित हैं।
(३) तृतीय में रुद्र सर्ग है तथा दक्ष के शाप का वर्णन है।
(४) चतुर्थ में सब राजाओं की उत्पत्ति प्रकरण में वंशों का अनुकीर्तन है।

(५) अन्त्येऽपवर्गसंस्थानं मोक्षशास्त्रानुकीर्तनम्।
सर्वमेतत्पुराणेऽस्मिन् कथयिष्यामि वो द्विजाः ॥९॥
इति। (१/५७-६६)

तत्र पूर्वनिर्दिष्टमेव विष्णुब्रह्म-संवादसिद्धं पाद्मं ब्रह्मणा मरीचये प्रोक्तम् तेन तु मरीचिना पुनरनाख्यानात्परम्परा न प्रचरिता। किन्तु ब्रह्मणैव पुनरन्यस्मै प्रोक्तम् कस्मै इत्याकांक्षायामुक्तं तेनैवाग्रे—

**ब्रह्मणा यत्पुरा प्रोक्तं पुलस्त्याय महात्मने।**
**पुलस्त्येनाथ भीष्माय गङ्गाद्वारे प्रभाषितम् ॥१॥** २/४७

**सूतेनानुक्रमेणेदं पुराणं संप्रकाशितम्।**
**ब्राह्मणेषु पुरा यच्च ब्रह्मणोक्तं सविस्तरम् ॥२॥** २/४८

तदित्थं ब्रह्मपुलस्त्यसंवादसिद्धे पाद्मनिबन्धे नत्त्वेव पुलस्त्यभीष्मादिसंवादा विषयीभवन्ति। एवं पुलस्त्यभीष्मसंवादे पूर्वसंवादोल्लेखाद्वैलक्षण्येऽपि सूतशौनकसंवादादयो

---

(५) अन्तिम में अपवर्ग संस्थानों में मोक्ष शास्त्र कथित है। हे द्विजो! मैं इस पुराण में आपको सब बतलाऊँगा ॥९॥

उनमें पूर्व निर्दिष्ट विष्णु ब्रह्मा के संवाद वाला ही पद्मपुराण ब्रह्मा के द्वारा मरीचि को कहा गया उस मरीचि ने पुनः शिष्यों में आख्यान नहीं करने से परम्परा को चालू नहीं रखा किन्तु ब्रह्मा ने ही पुनः अन्य को कहा। किसको कहा इस आकांक्षा में इसी में आगे कहा—

ब्रह्मा ने जो पहले महात्मा पुलस्त्य के समक्ष प्रवचन किया और पुलस्त्य ने गंगा के द्वार (हरिद्वार) में भीष्म को प्रवचन किया ॥१॥

सूत ने अनुक्रम से इस पुराण को सम्पादन से प्रकाशित किया जिसको प्राचीनकाल में विस्तारपूर्वक ब्रह्मा ने ब्राह्मणों को कहा अथवा जो प्रारम्भ में ब्राह्मण ग्रन्थों में अनेक ऋषियों के प्रवचन रूप में था, उसे ब्रह्मा ने व्याख्यात्मक विस्तार के साथ कहा ॥२॥

इस प्रकार ब्रह्मा और पुलस्त्य संवाद से सिद्ध पद्म निबन्ध (ग्रन्थ) में पुलस्त्य और भीष्म संवाद विषय सम्भव नहीं हैं। इसी भाँति पुलस्त्य और भीष्म के संवाद में पूर्व संवाद के उल्लेख से विलक्षणता होने पर भी सूत और शौनक के संवाद आदि का

नोल्लिख्यन्ते। अथैतदेव पाद्मंलोमहर्षणाख्येन सूतेन मत्पित्रा पूर्वं सविस्तरं प्रकाशितम्। तदेव पाद्मं वेदव्यासेन पूर्वं पञ्चभिः पर्वभिरुपनिबद्धमासीत्। तेषु च पञ्चसु पर्वसु इत्थमित्थं विषया निर्द्दिष्टाः सन्तिः। तानेव सर्वान् विषयान् निबन्धांश्चालोच्य मयेदानीं पञ्चभिः खण्डैः परिच्छिद्य पञ्चपञ्चाशत्सहस्रश्लोकैर्युष्मभ्यमाख्यायते इत्यर्थः।

तदित्थमुग्रश्रवसः पाद्मपुराणवचनेन स्पष्टमनेकेषां पद्मपुराणानां विभिन्नाकारप्रकाराणां सत्ता सिध्यति। तथैवान्येषामपि ब्राह्मादिपुराणानामनेकानेकनिबन्धाः काले काले विभिन्न-कर्तृकाः सम्भाव्यन्ते तथा हि—ब्राह्मं पाद्मं वैष्णवं चेत्याद्यौग्रश्रवसः पाद्मोत्तरखण्डवचनेन ब्राह्मपाद्मवैष्णवानां नारदीय-भविष्यब्रह्मवैवर्त्तवाराहाणां वामनकौर्ममात्स्यानामाग्नेयार्द्धस्य च द्वापरान्ते शौनकादियज्ञारम्भात् प्रागेव लोमहर्षणप्रोक्तत्वं लभ्यते। इतरेषांतु सार्द्धसप्तपुराणानां वायवीय-भागवत-मार्कण्डेयानां लैङ्गस्कान्दगारुडब्रह्माण्डानामाग्नेयोत्तरमाहात्म्यस्य च कल्यब्द सहस्रपूर्तौ शौनकादियज्ञानवसानकाले लोमहर्षणपुत्रोग्रश्रवः प्रोक्तत्वमवसीयते। अथापीदानीमुपलभ्य मानेषु पुराणग्रन्थेषु औग्रश्रवसत्वेनाभिमतानामपि सप्तानां मध्यात्केषां-

---

उल्लेख सम्भव नहीं है। इसी पद्म पुराण को मेरे पिता लोमहर्षण सूत ने पहले विस्तारपूर्वक प्रकाशित किया जो पद्मपुराण वेद व्यास के द्वारा पहले ही पाँच पर्वों में उपनिबद्ध किया गया था। उन पाँच पर्वों में इस इस प्रकार के जो विषय निर्दिष्ट है उन्हीं सारे विषयों की और ग्रन्थों को आलोचना कर कर मेरे द्वारा इस समय पाँच खण्डों में सीमित कर पचपन हजार श्लोकों के द्वारा आप लोगों के लिए कहा जा रहा है।

इस प्रकार उग्रश्रवा के पद्मपुराण के वचन से विभिन्न आकार प्रकार वाले अनेक पद्मपुराण ग्रन्थों की स्पष्ट सता सिद्ध होती है। इसी प्रकार अन्य ब्राह्म आदि पुराणों के भी विभिन्न कर्तृक अनेकानेक निबन्ध समय-समय पर सम्भावित हैं। जैसे ब्राह्म पाद्म और वैष्णव इत्यादि। उग्रश्रवा के पाद्मोत्तर खण्ड के वचन से ब्राह्म, पाद्म, वैष्णव, नारदीय, भविष्य, ब्रह्मवैवर्त, वाराह, वामन, कौर्म और मात्स्य पुराणों के तथा आग्नेय अर्ध के द्वापर के अन्त में शौनक आदि के यज्ञ से पहले ही लोमहर्षण द्वारा प्रवचन करने का पता चलता है। अन्य वायवीय, भागवत, मार्कण्डेय लैङ्ग, स्कान्द, गारुड़, ब्रह्माण्ड नाम के पूरे पुराणों का और आग्नेयोत्तर माहात्म्य रूप साढ़े सात पुराणों का कलियुग के हजार वर्ष पूर्ण होने पर शौनक आदि के यज्ञ के अवसानकाल में लोमहर्षण के पुत्र उग्रश्रवा के प्रवचन का ज्ञान होता है। तथापि इस समय उपलब्ध होने वाले पुराण ग्रन्थों में उग्रश्रवा

च्चिल्लोमहर्षणप्रोक्तत्वं दृश्यते तथान्येषां लौमहर्षणत्वेनाभिमतानामपि दशानां मध्यात् केषांचिदुग्रश्रवः प्रोक्तत्वं दृश्यते। यथा—लिङ्गपुराणे—

**दृष्ट्वातमतिविश्वस्तं विद्वांसं रोमहर्षणम्।**
**अपृच्छँश्च ततः सूतमृषिं-सर्वे तपोधनाः॥** (१ अ. १० श्लोक)

**कथं पूज्यो महादेवो लिङ्गमूर्तिर्महेश्वरः।**
**वक्तुमर्हसि चास्माकं रोमहर्षण सांप्रतम्॥** (२५ अ. १ श्लोक)

इत्येवमाद्युक्त्या तस्य रोमहर्षण-शौनकसंवादसिद्धत्वं लभ्यते। वायुपुराणस्यापि संबुध्यतन्नाम्नो निरुक्त्यादिना प्रशंसनाद्रोमहर्षणप्रोक्तत्वं सिद्ध्यति। एवं मत्स्यपुराणे यद्यपि लोमहर्षणोग्रश्रवसोर्नामोल्लेखो नास्ति। अथापि दीर्घसत्रान्ते प्रकथनादौग्रश्रवसत्वं विज्ञायते। पाद्मोत्तरवचनेन लोमहर्षणप्रोक्तमात्स्यस्य यत्रारम्भतः पूर्वकालिकत्वावगमात्। अथ ब्रह्मवैवर्तं-

---

के प्रोक्त सात पुराणों के बीच में भी कुछ लोमहर्षण के द्वारा कहे गये ज्ञात होते हैं तथा लोमहर्षण के प्रोक्त दस पुराणों के बीच में भी कुछ का उग्रश्रवा के द्वारा कथित होने का ज्ञान होता है, जैसा कि लिङ्ग पुराण में कहा है—

सभी तपस्वी ऋषियों ने अत्यन्त विश्वत विद्वान् सूत रोमहर्षण को देखकर यह पूछा—हे रोमहर्षण! लिङ्ग मूर्ति महेश्वर महादेव कैसे पूज्य हैं! इस समय आप हमें यही कहिये।

इस प्रकार के कथनों से लिङ्ग पुराण का रोमहर्षण शौनक संवाद रूप सिद्ध होना प्राप्त होता है। वायु पुराण में रोमहर्षण को सम्बोधित कर उसके नाम के निर्वचन से उसकी शौनकादि ऋषियों द्वारा की गयी प्रशंसा से वायुपुराण की भी रोमहर्षण प्रोक्तता सिद्ध हो रही है। मत्स्यपुराण में यद्यपि लोमहर्षण और उग्रश्रवा का नामोल्लेख नहीं है तथापि दीर्घ सत्र के अन्त में उसका प्रवचन होने के कारण वह उग्रश्रवा द्वारा प्रोक्त ज्ञात होता है जबकि पाद्मोतर वचन से लोमहर्षण द्वारा प्रोक्त मत्स्य का आरम्भ से ही पूर्व कालिकत्व ज्ञात होता है। इस समय उपलब्ध होने वाले ब्रह्मवैवर्त पुराण के भी सौति शौनक संवाद के द्वारा प्रवृत्त होने से उग्रश्रवा कृत होने का अवधारण किया जाता है।

स्यापीदानीमुपलभ्यमानस्य सौतिशौनक-संवादमुखेन प्रवृत्ततत्वादौग्रश्रवसत्वमवधार्यते लोम-हर्षणसौतित्वसंभवेऽपि—

**सुप्रसिद्धपदार्था ये स्वतन्त्रा लोक विश्रुताः ।**
**शास्त्रार्थ स्तेषु कर्तव्यः शब्देषु न तदुक्तिषु ।।**[1]

इति न्यायेनात्र पुराणे उग्रश्रवसोरेव सूतपदेन ग्रहणात् सौतिपदेन चोग्रश्रवस एव ग्रहणौचित्यात्। न चेत्थं सति पाद्मविरोधः। तत्रैवोग्रश्रवसा प्रोक्ते पाद्मे पाद्मस्य लोम-हर्षणप्रोक्तत्वप्रतिपादनादवश्यं लोमहर्षणप्रोक्तानामपि केषांचित्पुराणानामुत्तरकाले उग्रश्रवः-प्रोक्तत्वनिबन्धवत्वावगमात्। तदित्थमेतेष्वष्टादशपुराणेषु केषांचिल्लोमहर्षणप्रोक्तत्वमेव ।।१ ।। केषां चिदुग्रश्रवःप्रोक्तत्वमेव ।।२ ।। केषांचिदुभयप्रोक्तत्वान्निबन्धद्वैधम्। केषांचित्तूभयानुक्तत्वा-दन्यप्रोक्तत्वमेव ।।३ ।। यत्र निबन्धद्वैधं तत्रान्यतरगणनया अष्टादशसंख्यापूर्तिः क्रियते। यथा लौमहर्षणपाद्मेनौग्रश्रवसः पाद्मेन वा। लौमहर्षणेन देवीभागवतेनौग्रश्रवसेन श्रीमद्भागवतेन

---

लोमहर्षण का सौतित्व सम्भव होने पर भी एक न्यायविशेष से यहाँ पुराण वाङ्मय में लोमहर्षण तथा उग्रश्रवा का सूत शब्द से ग्रहण किया जाने से सौति शब्द से केवल उग्रश्रवा का ही ग्रहण करना उचित है। वह न्याय यह है कि—

स्पष्ट अर्थ वाले लोक व्याप्त सुप्रसिद्ध पदार्थ स्वतन्त्र हों तो उनमें शास्त्रार्थ होना चाहिये न कि शब्दों में अथवा उनसे सम्बद्ध अन्य उक्तियों में।

ऐसा होने पर पद्मपुराण से कोई विरोध नहीं है क्योंकि उग्रश्रवा के द्वारा प्रोक्त पद्मपुराण में उसका लोमहर्षण के द्वारा भी प्रोक्तता का प्रतिपादन होने के कारण अवश्य लोमहर्षण के द्वारा कहे हुए कुछ पुराणों का भी उत्तरकाल में उग्रश्रवा के द्वारा प्रोक्त ग्रन्थ होने का भी ज्ञान होता है। इस प्रकार इन अठारह पुराणों में कुछ लोमहर्षण के द्वारा प्रोक्त है ।।१ ।। और कुछ उग्रश्रवा के द्वारा प्रोक्त है ।।२ ।। कुछ पुराणों का दोनों के द्वारा प्रोक्त होने के कारण उनके दो निबन्ध ग्रन्थ रूप मिलते हैं। कुछ पुराणों का दोनों के द्वारा ही कथन न होने के कारण उनका अन्यों के द्वारा प्रोक्तत्व स्पष्ट ही है ।।३ ।। जहाँ एक पुराण के दो निबन्ध है वहाँ दोनों में से किसी एक की गणना से अठारह की संख्या की पूर्ति की जाती है जैसे लोमहर्षण के पद्मपुराण से अथवा उग्रश्रवा के पद्म से, लोमहर्षण के देवीभागवत

---

१. मूलग्रन्थे तु ''सुप्रसिद्धपदार्था ये स्वतन्त्रालोकविश्रुषुकर्त्तव्यशब्देषु न तदुक्तिषु'' इति पाठः पठितो यो हि त्रुटिपूर्णोऽतः संशोधितस्शुद्धपाठः मूले स्थापितः। प्रसिद्धपाठस्तु ''अभिव्यक्तपदार्थाये इत्येवरूपे'' वर्तते।

